प्रतिपादितं तत्र यो विरक्त उत्तमाधिकारी शिष्यः स आचार्यं परमरहस्यं पृष्टवानित्यर्थः ॥ ४ ॥ ६ ॥

[ वाक्यभाष्यम् ] [ पृ. ४४ ] **वनतेस्तत्कर्मण इति** । वनु संभजन इत्यस्य रूपं तेन वनु धातुः संभजनकर्मा । संभजनार्थक इति यावत् । **गौणमिति** । गुणादागतं गौणं यौगिकं न रूढमित्यर्थः । **सेवन्ते स्मेति** । अत्र स्मेतिपदं निरर्थकं केवलं वाक्यालंकारकं भूतकालवाचिनोऽर्थस्येहानन्वितत्वात् ॥ ४ ॥ ६ ॥

[ प्रकाशिका ] [पृ.४०] **अन्वर्थमिति** । अर्थमनुगतं यथार्थम् । **ततत्वादिति** । तनु विस्तारे इत्यस्य [ पृ. ४४ ] षनु संभक्तावित्यस्य च रूपम् । तथा न तद्वनमितिशब्दस्य व्यापकं भजनीयं चेत्यर्थः । **तद्विशदयति–तनोतेरिति** । इत्यप्रत्यय इति । व्याकरणान्तरस्थं वचनमेतत् । **वनतेरकार इति** । वनेत्यकारान्तशब्दः कथमपि साध्य इत्यर्थः ॥ ४ ॥ ६ ॥

### चतुर्थखण्डे सप्तममन्त्रः ॥ ४ ॥ ७ ॥

( पदभाष्यम् ) [ पृ. ४१ ] **उत्तरार्थमिति** । श्रोत्रस्य श्रोत्रमित्यनेनोक्तोपनिषत् । सैवेदानीं मयोक्तेति शिष्यं प्रत्याचार्योऽवधारणपूर्वकं निर्दिशति विद्याप्राप्त्युपायानामुत्तरेषां तपआदीनां विधानार्थम् । अतो न पुनरुक्तिः । विद्यातु निरपेक्षैवातः सा प्रथममुक्ता । तपआदिसाधनविधानार्थमेवोक्तविद्याया अवधारणमिति प्रश्नमुखेन स्फुटयति–**परमात्मविषयामिति** । **फलवचनेनोपसंहार इति** । संपूर्णतया विद्याया अनुक्तौ फलकथनमसंगतं भवेदित्यर्थः । **तस्मादिति** । उपनिषच्छेषः–उपनिषदङ्गम् । अनवशेषितत्वात्–समापितत्वात् । **किं पूर्वोक्तेति** । श्रोत्रस्य श्रोत्रमित्याद्युपनिषदङ्गत्वेनान्यानि सहकारिसाधनान्यपेक्षते नो वा । **पिप्पलादवदिति** । प्रश्नोपनिषदीयमाख्यायिका–सुकेशादयः षण्महर्षयो ब्रह्मान्वेषणं कुर्वन्तः पिप्पलादमहर्षिं समुपसन्नाः । तान्स पिप्पलादो ब्रह्मविषयमुपदिदेश । अन्ते नैतावदेवाहं ब्रह्म वेद नातः परमस्तीत्युवाच । तद्वदत्राप्याचार्येण नातः परमस्तीति वक्तव्यमित्यर्थः । समाधत्ते–**एतदुपपन्नमिति** । [ पृ. ४२ ] **वेदैरिति** । अयमर्थः । तस्यै तपो दम इति मन्त्रे वेदानां तदङ्गानां च तपआदिभिः सह पाठः कृतः परं वेदास्तदङ्गानि च न ब्रह्मविद्याप्राप्त्युपायभूतानि तत्सामान्यात्तपआदीन्यपि न ब्रह्मविद्याप्राप्त्युपायभूतानि । योग्य-

तानुसारं तपआदीनां ब्रह्मविद्याप्राप्त्यवङ्गाङ्गिभावः कल्प्यते सहपाठोऽकिंचित्कर इति शंकते–**सहपठितानामपीति** । एवं विभागपूर्वकं विनियोगः कर्तव्यस्तथा चार्थसंबन्ध उपपद्येत । स च विभाग इत्थम् । तपःप्रभृतीनां विद्यांगत्वेन विनियोगः । वेदानां तदंगानां चार्थप्रकाशद्वारा कर्मात्मज्ञानोपायत्वम् । एवं सहकथनेऽपि पृथग्विनियोगे श्रौतं दृष्टान्तमाह–**यथा सूक्तवाकानुमन्त्रणमन्त्राणामिति** । " अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् ". इत्यादिनैव सूक्तवाकेन सर्वयागसमाप्तौ देवतानुमंत्रणं क्रियते । यद्यप्यस्मिन्सूक्तवाके बह्व्यो देवताः पठ्यन्ते तथापि यस्मिन्यागे या देवताहूता तस्या एव विसर्जने योग्यतावशात्तस्य सूक्तवाकस्य विनियोगः । सूक्तवाकानुमंत्रणमंत्राणामित्यत्र सूक्तवाकेनानुमंत्रणमिति तृतीयासमासः । **नायुक्तेरिति** । युक्तिर्घटनां तस्या असंभवात् । प्राप्नोति–गच्छति । अन्नु गतिपूजनयोरिति धातोः प्रोपसृष्टस्य रूपम् । सूक्तवाकानुमंत्रणमन्त्रेषु योग्यतायाः सत्त्वात्तथा व्यवस्थायामप्यत्र कर्मणां विद्याविरुद्धत्वेन योग्यताभावात्तथा व्यवस्थाया असंभवादित्यर्थः । तमेव योग्यताभावं स्पष्टयति–**नहीति** । **निःश्रेयसस्येति** । एवं च ब्रह्मविद्यायास्तत्फलस्य कर्मवैलक्षण्यमित्यर्थः । **प्रश्नप्रतिवचनस्येति** । उपनिषदमब्रूमेति गुरूक्तप्रश्नोत्तरवाक्यस्य ॥४॥७॥

( वाक्यभाष्यम् ) [ पृ. ४१ ] ब्राह्मीत्यस्य व्याख्यानं–**ब्राह्मणजातेरिति** । ब्राह्मणजात्यनुष्ठेयां विद्यात्मसाधनभूताम् । [ पृ. ४२ ] अब्रूमेत्यस्य भविष्यकालिकमर्थमङ्गीकुरुते व्यवस्थापयति च–**ब्राह्मी नोक्तेत्यादिना** । **भूताभिप्राय इति** । भूतकालसंबंधिक्रियाविशिष्टोऽब्राब्रूमेति शब्दो न किन्तु भविष्यकालसंबंधिक्रियाविशिष्टः ॥ ४ ॥ ७ ॥

( प्रकाशिका ) [ पृ. ४२ ] श्रुतिस्योत्तरालोचने पक्षत्रयं संभवति तदाह–**किमुपनिषत्प्रतिपाद्यमिति** ॥ ४ ॥ ७ ॥

चतुर्थखण्डेऽष्टममन्त्रः ॥ ४ ॥ ८ ॥

( पदभाष्यम् ) [ पृ. ४३ ] **अमृदितकल्मषस्येति** । अविनष्टपातकस्य । **यथेन्द्रेत्यादि** । चतुर्थपर्यायपर्यन्तमिन्द्रस्य प्रजापतिबोधितब्रह्मविषयिणी प्रतिपत्तिर्ज्ञानं नासीत्तस्यैव प्रजापतेर्वाक्याद्विरोचनस्य तु प्रथम एव पर्याये विपरीता देहात्मप्रतिपत्तिरभवदियं कथा छान्दोग्येऽष्टमाध्यायेऽष्टमखण्डेऽस्ति ।

यथाश्रुतमिति । श्रुत्यनुसारि । अमानित्वमिति " अमानित्वमदंभित्व-महिंसा क्षान्तिरार्जवम् " भ. गी. १३।७ इत्यादिभगवद्गीतोक्तम् । षडिति । शिक्षा-पाणिन्यादिकृता । कल्पः—श्रौतस्मार्तसूत्रमाश्वलायनादिमुनिकृतम् । व्याकरणं-पाणिनिप्रभृतिनिर्मितम् । निरुक्तं—यास्ककृतम् । छन्दः-पिंगलकृतम् । ज्योतिषं—लगधकृतम् । सर्वांगाणीत्यनेन शिरआद्यवयवग्रहणे शिक्षादीनां ग्रहणं कथमत आह—अस्मिन्पक्ष इति । वेदपदेन शिक्षादिग्रहणे युक्ति-माह—अंगिनीति ॥ ४ ॥ ८ ॥

( वाक्यभाष्यम् ) [ पृ. ४२ ] ब्रह्माश्रयेति । ब्रह्म वेद आश्रयो ब्रह्मविद्यायाः । वेदमूलत्वात्तस्याः॥ ४ ॥ ८ ॥

( प्रकाशिका ) [ पृ. ४४ ] तप आलोचने इत्यस्य रूपं तप इति मत्वाह—शास्त्रपर्यालोचनं वेति । तदनुकूलग्रन्थाश्चेति । ऐतरेयशतपथा-दिब्राह्मणानि । " वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् " या. स्मृ. अ. २।८३ इति याज्ञवल्क्यस्मृतेराह—अपीडाकरमिति ॥ ४ ॥ ८ ॥

चतुर्थखण्डे नवममन्त्रः ॥ ४ ॥ ९ ॥

(पदभाष्यम्) [ पृ. ४४ ] औपचारिक इति । इतरलोकापेक्षया स्वर्गस्य बहुकालस्थायित्वेन लाक्षणिकोऽनन्तशब्दः स्यादिति शङ्कार्थः ॥४॥९॥

( वाक्यभाष्यम् ) [ पृ. ४४ ] सुखप्राय इत्यनेन सुखबाहुल्यादल्पदुःखात्मकत्वं तस्य लोकस्य भवेत्किंच सुखवैशिष्टयेन सगुणत्वमपि तस्य स्यादत आह—निर्दुःखात्मनीति । सुखप्राय इत्यस्य दुःखाभावे तात्पर्य-मिति भावः ॥ ४ ॥ ९ ॥

( प्रकाशिका ) [ पृ. ४६ ] त्रिविधपरिच्छेदरहित इति । देशतः कालतो वस्तुत इति त्रिविधः परिच्छेदस्तद्रहिते । उक्तसर्वावधारणार्थेति । ग्रन्थसमाप्तिद्योतिकेति तात्पर्यम् ॥ ४ ॥ ९ ॥

इति चतुर्थः खण्डः ॥ ४ ॥

इति श्रीकेनोपनिषद्व्याख्यात्रयबालबोधिनी पाठकोपाव्हश्रीधरशास्त्रिकृता समाप्तिमयासीत् ॥

---

# उपनिषद्व्याख्यात्रयगतानां वचसां सूचिः

## केनोपनिषत्पदभाष्ये लब्धस्थलानि वचांसि

इ.



केनोपनिषत्पदभाष्येऽलब्धस्थलानि वचांसि.